# NALINI CHARITHAM



BY

Mahakavi T. S. SUNDARESA SHARMA

Published by
The General Stores,
Tanjore.

 1948 [Price As. 6

## ॥ विषयाः ॥

॥ श्रीः ॥

# ॥ नलिनीचरितम् ॥

## ॥ महाकविसुन्दरेशशर्मप्रणीतम् ॥

### ॥ प्रथमः सर्गः ॥

कालिन्दीतटकानने क्वचितप्राये तमालद्रुमैः
सद्यः प्रोद्गतवारिवाहनिचयैश्छन्ने च शीतद्युतौ ।
अन्तर्धानमवेक्ष्य यस्य दयितस्याभीरनारीगणे
क्रन्दत्याविरभूत्स्मिताञ्चितमुखस्सेन्दुस्स कृष्णोऽवतु ॥१॥

आसीन्नन्दव्रजे पूर्वं चिराद्विश्रान्तयौवना ।
सदर्पा विदिशाभिख्या गोपी पण्डितमानिनी ॥२॥

पुत्रो मानधनस्तस्याः सुधामेति बहुश्रुतः ।
न्यवसद्रूपशालिन्या जायया च नवोढया ॥३॥

कुलीना तु स्नुषा भीरुर्नलिनीत्याह्वयान्विता ।
परिचर्यापरा भर्तुः तथा श्वश्र्वाश्च साऽभवत् ॥४॥

अन्तर्गृहैकसञ्चारा सा सखीभिरुदाहृतम् ।
अभीक्ष्णमपि शुश्राव कृष्णस्याद्भुतचेष्टितम् ॥५॥

पूतनामारणं पूतं शकटासुरभञ्जनम् ।
चक्रवत्सतृणावर्तरासभादिनिबर्हणम् ॥६॥

कालीयगर्वभङ्गं च रक्षणं दवपावकात् ।
गोवर्धनाद्रेरुद्धारं सर्वं शुश्राव विस्मिता ॥७॥

अद्भुतान्यपदानानि शृण्वन्त्या गोकुलेशितुः ।
बालायाः साधुवृत्तायाः मनस्तेनैव सङ्गतम् ॥८॥

सदा सस्मार तं कृष्णम् यथा सख्या समीरितम् ।
नीलमेघनिभाकारं निटिलाकीर्णकुन्तलम् ॥९॥

नवकस्तूरितिलकं नवकञ्जारुणेक्षणम् ।
कटकाङ्गदकेयूरकुण्डलाभरणान्वितम् ॥१०॥

ईषद्विशददन्ताग्रमन्दहासमनोहरम् ।
ससौहृददयाप्रेमवीक्षणाकृष्टगोकुलम् ॥११॥

मयूरबर्हस्तबकसमलंकृतकुन्तलम् ।
सव्यांसन्यस्तशृङ्गाग्रं वेणुवेत्रलसत्करम् ॥१२॥

सुवर्णमालिकाकण्ठं विचित्रकुसुमस्रजम् ।
धेनुबृन्दखुरोद्धूतधूलीधूसरितालकम् ॥१३॥

यशोदानन्ददम्पत्योः चिरधर्मफलात्मकम् ।
शर्मप्रमोदनिलयं व्रजबालकसंहतेः ॥१४॥

दुष्टदैतेयदहनकालवारिधरोपमम् ।
ध्यायन्ती सततं सा तु कालं परमनीनयत् ॥१५॥

एकदा सायमायान्तं सा तं गोगोपसंवृतम् ।
शृङ्गवेणुरवैर्ज्ञात्वा गवाक्षं त्वरितं ययौ ॥१६॥

अपश्यदथ तन्वङ्गी मोहनं सर्वदेहिनाम् ।
मध्ये व्रजकुमाराणां कृष्णं मुग्धप्रसाधनम् ॥१७॥

यावदक्षिपथं सा तु दृष्ट्वाप्युत्फुल्ललोचना ।
न तृप्तिमुपलेभे तद्रूपं यत्तादृशं स्वयम् ॥१८॥

दधानमपि वेत्रं तमासन्नामृष्टगोव्रजम् ।
दृष्टं कृष्णमनुध्यायन्त्यास्त सर्वात्मना सती ॥१९॥

कैषास्य रूपसंपत्तिः कोवा गुणसमाश्रयः ।
शरीरबद्धं सुकृतं व्रजस्येत्यप्यचिन्तयत् ॥२०॥

निश्चिकायाथ सा न्यूनमुक्तं तावद्भवस्यया ।
यद्वर्ण्यमिदं रूपं यथावदपि कोविदैः ॥२१॥

तस्य दर्शनमात्रेण प्रेमभारवशंगता ।
तमेव हृदि कुर्वाणा चिरं तत्र बभूव सा ॥२२॥

सायन्तनार्ककिरणविशदीकृतभूषणः ।
तस्थौ हृदन्तरे तस्याः स्मेरमुग्धमुखस्सदा ॥२३॥

प्रातस्तं प्रस्थितं द्रष्टुं यतते स प्रसाधितम् ।
सायाह्नेषु च कान्तारात्प्रत्यागच्छन्तमेव सा ॥२४॥

वातायनस्य पार्श्वे सा ध्यायन्ती सततं प्रियम् ।
अतिष्ठत चिरं तन्वी तद्दर्शनकृतक्षणा ।।२५।।

दृष्टश्चेद्भगवान् कृष्णः चिरेण यतमानया ।
तत्तनुं संप्रविष्टेव नैवात्मानं विवेद सा ।।२६।।

एकदा भगवान् कृष्णः सर्वज्ञस्सर्वबान्धवः ।
तद्गेहसविधे सायं विलम्ब्य च मनाक्स्वयम् ।।२७।।

गवाक्षान्तरगां साध्वीमपि निर्वर्ण्य सादरम् ।
साभिलाषं स्मितं कृत्वा गोगोपैरावृतो ययौ ।।२८।।

अपूर्वं तस्य तत्कर्म दृष्ट्वा तु हृदयप्रियम् ।
चकोरी शरदारम्भं समीक्ष्येव ननर्त सा ।।२९।।

तत्रैव चिरमास्ते स्म स्मरन्ती सा तदुत्स्मयम् ।
अरुणाधरसंशोभि मुग्धं तच्च मुखाम्बुजम् ।।३०।।

प्रनष्टमिव सर्वस्वं दृष्ट्वा तस्य तिरोभवम् ।
अन्वशोचत्पृथुश्रोणी निश्वसन्ती सवेपथुः ।।३१।।

ततः कलुषितस्वान्ता मुग्धा सा तस्य वीक्षणात् ।
न प्रावर्तत कृत्येषु स्वयं वा चोदितापि वा ।।३२।।

श्वश्रूस्सा विदिशा वृद्धा नूनं वीक्ष्य स्नुषाहठम् ।
प्रभुत्वात्तस्य गेहस्य तां चुकोपात्यमर्षणा ।।३३।।

नापारयत्कथञ्चित्सा गोविन्दाकृष्टचेतना ।
यतमानापि कार्याणि सम्यक्कर्तुं मनीषिणी ॥३४॥

निधाय दधिपात्रेषु गोमयं विवशान्तरा ।
लिलेप नवनीतेन बहिर्द्वारवितर्दिकाम् ॥३५॥

गवां पानीयभाण्डेषु पक्वमन्नं विमुच्य सा ।
भुक्तये सिक्तपिण्याकं श्वश्र्वाः पत्युश्च सा न्यधात् ॥३६॥

धेनूनां पुरतो गोष्ठे काष्ठभारं निधाय सा ।
पलालनिचयं कृच्छ्रादाजहार महानसम् ॥३७॥

बलादुद्योजिता कृत्ये यदि व्यवसिता वधूः ।
बभञ्ज पात्राण्यथवा वस्तून्यन्यवशान्तरा ॥३८॥

आक्रन्ददथ सा श्वश्रूः जातपात्रार्जनश्रमा ।
प्रसमीक्ष्य प्रनष्टानि भाण्डानि स्नुषया तया ॥३९॥

चिखेद सापि पात्राणि वीक्ष्य भग्नान्यनेकधा ।
अवशेन्द्रियसंग्रामं निनिन्दात्मानमात्मना ॥४०॥

श्रद्धया जागरूकेण चेतसा कुर्वती कृतीः ।
सपदि स्मृतगोविन्दा चक्रे किमपि सा वधूः ॥४१॥

सुधामश्रवणं नीतं सर्वं तस्यास्तु चेष्टितम् ।
वृद्धयाऽर्घ्यं यथा लोके कल्पयित्वा यथामति ॥४२॥

भग्ने भाण्डद्वये प्रत्ते निर्मूल्ये नीलिमान्विते ।
शतं भग्नमिति प्रोक्तं नवानां वृद्धया तदा ॥४३॥

क्षणं शय्यागृहगतां श्राम्यन्तीं वा क्षणार्धकम् ।
वक्ति पुत्राय जरती शयानां सर्वदा वधूम् ॥४४॥

किमद्य वहुनोक्तेन श्वश्र्वा भर्त्राच साधुना ।
तद्गेहवासिनी सा तु लम्भिता यातनाशतम् ॥४५॥

सहमाना च कृच्छ्राणि सातु साध्वी पतिव्रता ।
यथा पुरं परिचरन्त्यनयद्बहुवासरान् ॥४६॥

॥ इति प्रथमः सर्गः ॥

## ॥ द्वितीयः सर्गः ॥

---

एकदा नन्दजं गोपैः प्रत्यावृत्तं दिनात्यये ।
पुरतः स्वगृहस्यापि विलम्ब्याकारणं चिरम् ॥१॥

गवाक्षान्तरमालक्ष्य स्मयमानं सकैतवम् ।
स्नुषां चाप्यभिनन्दन्तीं ददर्श विदिशा स्वयम् ॥२॥

असंभाव्यमचिन्त्यंच पुरो वृत्तं विलोक्यसा ।
चितानलशिखेवारात् जज्वाल क्रूरदर्शना ॥३॥

भूतोपहतचित्तेव नृत्यन्ती च गृहान्तरे ।
बभ्राम परितो वृद्धा लपन्ती वाग्वशं वचः ॥४॥

अपूर्वां तां समालक्ष्य चेष्टां श्वश्र्वा भयावहाम् ।
बिभेति स्म स्वयं भीरुः शीलविप्लवशङ्कया ॥५॥

स तु कृष्णोऽरविन्दाक्षो नापयाति हृदन्तरात् ।
कृच्छ्रेणोद्वास्यमानोऽपि करिष्ये किन्नु दुर्बला ॥६॥

मूढया स्वयमेवेदं कष्टं सम्पादितं मया ।
किन्नु वक्ष्यति मां भर्ता जना वा गोकुलौकसः ॥७॥

साध्वी सा चिन्तयन्तीत्थं भयशोकाकुलान्तरा ।
न तुतोषाद्य कृष्णस्य लीलाहासावलोकनैः ॥८॥

निवेद्य पुत्रे तत्पत्न्याः कृष्णेनाभाषणं रहः ।
वक्तुं तत्सवयस्कानां यशोदायाश्च सा ययौ ॥९॥

श्रुत्वेदं स सुधामापि पत्नीं तां विघ्नमानसाम् ।
दुरुक्तनिचयैर्विध्वा विव्यथे कार्यमूढधीः ॥१०॥

गर्जन्ती विदिशा सापि निन्दन्ती नन्दनन्दनम् ।
कुर्वती च द्विधा वीथीः चचार व्रजभूमिषु ॥११॥

सव्यांसन्यस्तसंव्याना स्रवद्वार्योष्ठनासिका ।
सुदूरे न्यस्य चरणौ प्राप नन्दगृहं क्षणात् ॥१२॥

यशोदापार्श्वमभ्येत्य रोषेण स्फुरिताधरा ।
तत्तुप्रोवाच निर्लज्जा खेदयन्ती मनस्विनीम् ॥१३॥

कृष्णस्य चेष्टितं पश्य दुष्टस्य तनयस्य ते ।
रहस्याविश्य मे गेहं स्नुषया रन्तुमिच्छति ॥१४॥

बहुशस्तु निरस्तोऽपि दुरुक्तोप्यपमानितः ।
वलते सुचिरं नित्यं गेहस्य पुरतो मम ॥१५॥

सम्भावयन्त्या सौहार्द्रं बान्धव्यं च चिरोर्जितम् ।
एतावन्मर्षितं देवि नैतच्छक्यमितः परम् ॥१६॥

त्वया चेन्न कृतः कृष्ण इतः शीलगुणान्वितः ।
कृतं तावन्मया विद्धि तस्य दुष्टस्य शिक्षणम् ॥१७॥

इत्थं विनिन्द्य सन्तर्ज्य यशोदां पुत्रवत्सलाम् ।
आजगाम क्षणार्धेन शपमाना सुतं गृहम् ॥१८॥

यशोदा गृहमानाय्य कृष्णं संक्षुब्धमानसा ।
अङ्के सादरमावेश्य विदिशोक्तमुदैरयत् ॥१९॥

न्याय्याः किमङ्ग दुश्चेष्टाः विदुषः कुलजस्य ते ।
धुरन्धरस्य रक्षायां यादवानां व्रजौकसाम् ॥२०॥

गच्छन्ति पुनरागच्छन्त्यन्याः सर्वाश्च सम्पदः ।
यान्त्येव न निवर्तन्ते शीलकीर्तिगुणाः क्वचित् ॥२१॥

गणयेन्न गुणान् लोको नापि चोपकृतीः कृताः ।
स्तोकं क्वचित्कदाचिद्वा प्रथयेद्यदि दुष्कृतम् ॥२२॥

यदि प्रशस्यते सद्भिः कृते कर्माणि दुष्करे ।
जुगुप्सितं ख्यापयेयुः कृतपूर्वमिवापरे ॥२३॥

नूनं दुष्टस्त्वयं लोको नैवार्हः किल जीवितुम् ।
साधूनां धर्मशीलानां दुर्विधानां च मानिनाम् ॥२४॥

चिराय जातः पुत्र त्वं तेजोरूपगुणालयः ।
न सहन्ते पुनस्त्वेताः प्रलपन्ति यथामति ॥२५॥

मा गच्छान्यगृहं तात मा व्याहर परस्त्रिया ।
अन्तर्गृहनिवासिन्या युवत्या च विशेषतः ॥२६॥

श्रुत्वा मातुरिदं वाक्यं प्रेम्णा भव्याय शंसितम् ।
अङ्गीकृत्येव मूर्धानं कम्पयन् स द्रुतं ययौ ॥२७॥

नूनं तद्वृद्धगर्दभ्याः प्रापणीयं च यत्फलम् ।
मृषोक्तेः सविधे मातुरित्यप्यन्तरचिन्तयत् ॥२८॥

शृगालीव गृहं प्राप्य नदन्ती भैरवस्वना ।
स्नुषां सुतं च निर्भर्त्स्य वृद्धा वाक्यैररुन्तुदैः ॥२९॥

अन्तर्गेहान्तरागारबद्धां कृत्वा च सा स्नुषाम् ।
कृत्वाङ्के कुञ्चिकां मूढा कृतकृत्येत्यमन्यत ॥३०॥

विषण्णा नलिनी सा तु बद्धान्तर्गृहकोटरे ।
अचिन्तयत्स्वपापौघफलमेव न चान्यथा ॥३१॥

भर्तारमपि वा श्वश्रूं साध्वी सा नाभ्यसूयत ।
इदं शीलं तु नारीणां कुलजानां निसर्गजम् ॥३२॥

एकान्तनिष्ठा तस्यास्तु कृष्णं गोकुलमण्डनम् ।
मनस्यावेशयामास निर्वृतिं च परां गता ॥३३॥

हृदा ददर्श गोपालमुक्तमादौ वयस्यया ।
ततः पद्मपलाशाक्षमायान्तं गोपबालकैः ॥३४॥

सप्रेमवीक्षणं पश्चात् हृदये पर्यवर्तत ।
ध्यानादुत्पुलका तन्वी तस्थावानन्दनिर्भरा ॥३५॥

पश्येयं किमु गोपालं मुग्धहासलसन्मुखम् ।
किमु वा व्याहरेद्भक्तां रहसि प्रेमविह्वलाम् ॥३६॥

दृढं स बाहुलतया किमाश्लिष्येदिमां प्रभुः ।
चिन्तयन्ती चिरायेत्थं बभूवोद्गतमानसा ॥३७॥

दिवसेषु गतेष्वेवं केषुचिन्मधुसूदनः ।
इयेषानुग्रहं कर्तुं नलिन्या भक्तजीवितः ॥३८॥

विधातुं गर्वभङ्गं च श्वश्र्वास्तस्याः खलान्तकः ।
वैशद्यमात्ममायाया गोपालः स मनो दधे ॥३९॥

॥ इति द्वितीयः सर्गः ॥

॥ तृतीयः सर्गः ॥

सुधामा निरगाज्जातु कुतोऽपि मथुरां प्रति ।
भार्या संरक्षणधुरं न्यस्य मातरि विज्वरः ॥१॥

श्वश्रूरपि दृढं बद्ध्वा कवाटं सार्गलं स्वयम् ।
विन्यस्य कुञ्चिकां नीव्यां बहिरागाद्यदृच्छया ॥२॥

ददर्श कृष्णं गच्छन्तं गोपैर्वादित्रवादिभिः ।
सक्रोधं पुरतोऽभ्येत्य तं दर्पादिदमब्रवीत् ॥३॥

इतो दर्शय मा दुष्ट साहसं कैतवं मयि ।
जानीहि मां दुराधर्षां विदिशामपि घातुकैः ॥४॥

उन्मोचितः कथं धूर्तः तदेत्यद्यापि चिन्तये ।
स्नुषया मम सम्भाष्य को वान्यो जीवितं धरेत् ॥५॥

कृपया नियतेर्नूनं मोचितस्त्वं तदा शठः ।
इतो गेहदिशं वा मे मा द्राक्षीः खलपांसन ॥६॥

न याचेय पुनर्गत्वा मातरं गर्विणीं तव ।
करिष्ये धृतदण्डाहमुचितं तव दुष्कृतेः ॥७॥

अकारणं तर्जयन्त्या समागम्य पुरःस्वयम् ।
अव्याहरन् विदिशया ययौ सोत्स्मय एव सः ॥८॥

यथाजाता तु सा वृद्धा रोषाधिक्याच्च मन्दधीः ।
कृष्णं मेने भृशत्रस्तं वाक्यैस्स्वैरद्य निष्ठुरैः ॥९॥

सायाह्ने जरतीसङ्घे चलितेऽस्या गृहाङ्गणे ।
काचिदस्मारयद्रात्रौ पुराणपठनोत्सवम् ॥१०॥

अन्याप्यवर्णयद्वृद्धा सोत्सुका श्रोतृमागतान् ।
तदुत्सवाय सम्भारान् ग्रामीणैर्बहु कल्पितान् ॥११॥

स्थानलाभाय सर्वाभिः गन्तव्यं प्रथमं द्रुतम् ।
इति निश्चित्य तास्सर्वा उत्सवैकप्रिया ययुः ॥१२॥

घृणयेवोडुसन्दोहे द्योतयंस्तं दिवस्पतिः ।
ममज्ज पश्चिमाम्भोधौ स सप्ततुरगारुणः ॥१३॥

विदिशायाः पुनस्तस्याः डोलारूढमभून्मनः ।
स्थातव्यं गृहकोणे वा गन्तव्यं वा कथां प्रति ॥१४॥

स्नुषाया रक्षणं त्वेतत् पुत्रेणार्पितमेकतः ।
अन्यत्र बहु सम्भारैः क्रियते स महोत्सवः ॥१५॥

प्रातः निर्भर्त्सितः कृष्णः कातरो नोत्तरं ददौ ।
अथवा कितवः सोऽयं नैव विस्रम्भमर्हति ॥१६॥

मिलेत्तत्रोत्सवे नक्तं सर्वो व्रजगतो जनः ।
दास्यते विविधं भक्ष्यं पुराणान्ते व्रजौकसाम् ॥१७॥

इत्थं विचिन्त्य सुचिरं विदिशा भक्ष्यलोलुपा ।
गन्तुं तदुत्सवायैव व्यतनोत्सा विनिश्चयम् ॥१८॥

पूर्वरात्रविधिं कृत्वा भोजयित्वा च सा स्नुषाम् ।
अन्तर्गृहान्तरावेश्य दीनां ध्यानपरायणाम् ॥१९॥

अर्गलैः सुदृढां कृत्वा बहिर्द्वारकवाटिकाम् ।
बद्धां कुञ्चिकया कृत्वा तच्चाकृष्य समीक्ष्य च ॥२०॥

कुञ्चिकामपि वस्त्रान्ते सङ्ग्रन्थ्य द्वित्रिवारकम् ।
शान्तेन मनसा तूर्णं ययावुत्सवमन्दिरम् ॥२१॥

तत्र दृष्ट्वा महत्कर्म कृतं गोपजनैर्महे ।
विस्मयात्कुतुकाच्चापि पश्यन्त्यासीत् चिराय सा ॥२२॥

अन्तर्गृहे निबद्धा सा वधूरायतलोचना ।
ध्यायन्त्येव तदा कृष्णं तस्थावामीलितेक्षणा ॥२३॥

उत्सवाय तदा तत्र सङ्घे महति संकुले ।
जज्वाल दीपसाहस्रं जेतुमिन्दुमिवोदितम् ॥२४॥

युवगोपालसंघुष्टान् शृण्वन्त्यो वाद्यसंचयान् ।
स्त्रियो बालाश्च पुरुषाः तत्र तत्रावतस्थिरे ॥२५॥

पौराणिकः समभ्येत्य दृश्यालङ्कारभूषणः ।
प्रयत्नान्निर्मिते स्वस्मै समुपाविशदासने ॥२६॥

विरतस्तत्क्षणादेव जनकोलाहलो महान् ।
वाद्यानां निनदः स्त्रीणामालापोऽपि महारवः ॥२७॥

वृद्धाया विदिशायास्तु रसयन्त्या महोत्सवम् ।
दुनोति स्मासकृच्चिन्ता स्नुषया गृहसंस्थया ॥२८॥

तदा तु भगवान्कृष्णः रूपं सौधाममास्थितः ।
आविरासीज्जनौघेऽस्मिन् जरत्यास्सविधे पुरः ॥२९॥

दृष्ट्वा तु तं परिक्लान्तं वसानं क्लिष्टवाससम् ।
स्वेदवारिपरिक्लिन्नं विशदोष्टपुटाधरम् ॥३०॥

अन्तर्गतेक्षणं क्षामकण्ठं परिगतोदरम् ।
भयसंविग्नहृदया पप्रच्छ सदयं तदा ॥३१॥

सुखेन किं गतं पुत्र स्नातं किं किमु वाशितम् ।
चिरायगमनं कच्चित् सप्रयोजनमेव ते ॥३२॥

प्रणयेन भयेनापि तया पृष्टः प्रसन्नधीः ।
प्रत्युवाचाथ जरतीं लीलामानुषविग्रहः ॥३३॥

सफलं सकलं मातः भवेत्पूर्णं चिकीर्षितम् ।
दुर्गमार्गाटनादद्य खिद्येते चरणौ मम ॥३४॥

अपश्य गृहमागत्य बहिर्बद्धं कपाटकम् ।
इहस्थां भवतीं ज्ञात्वा त्वरयाऽहमुपागतः ॥३५॥

इत्युक्तवन्तं तं दृष्ट्वा भृशं शोकाकुलान्तरा ।
कुञ्चिकामवमुच्याथ ग्रन्थित्रयमदात्स्वयम् ॥३६॥

वत्स नूनं परिक्लान्तः गच्छ गेहमितो द्रुतम् ।
कवाटमनयोद्घाट्य याह्यन्तरमनिन्दित ॥३७॥

आस्तेन्तर्नालिनी बाला यथेष्टं भुङ्क्ष्व मा चिरम् ।
इत्युक्तवत्यां तस्यां तु गृहीत्वा कुञ्चिकां प्रभुः ॥३८॥

उवाच त्रस्तवत्तान्तु किञ्चित्संक्षुब्धलोचनः ।
दुरुक्तः किं त्वया कृष्णः प्रातर्गोपैर्गतो वनम् ॥३९॥

जरती तमुवाचाथ रोषेण कलुषेक्षणा ।
उक्तं दुरुक्तं किं तेन पूज्यः किं जारपुङ्गवः ॥४०॥

बन्धुं बालं च तं मत्वा मुक्तस्त्वेतावता खलः ।
अन्यथा जरतीकृत्यं दर्शितं स्यात्सुदुस्सहम् ॥४१॥

सक्रोधमुक्तं श्रुत्वेदं प्रोवाच खलसूदनः ।
ज्ञातं ग्रामप्रविष्टेन मया मातरिदं पुनः ॥४२॥

न्याय्यैरपि वचोभिस्ते कृष्णः कोपवशंगतः ।
रचयिष्यति यामिन्यामित्थमित्यवधीर्यते ॥४३॥

इत्युक्त्वा श्रवणे किञ्चिदुवाच स विचक्षणः ।
श्रुत्वैतत्तु वचो वृद्धा जहास च ननाद च ॥४४॥

उवाच च ततो धृष्टा गच्छ शीघ्रमितो गृहम् ।
कृत्वान्तरर्गलं वत्स कवाटं नलिनीं व्रज ॥४५॥

यावन्ममागमस्तत्र तावद्भव तया सह ।
मामन्तरा कवाटन्तु मामोद्घाटय कस्यचित् ॥४६॥

समागच्छतु मूढोऽयं त्वद्वेषेण नराधमः ।
करिष्ये करणीयञ्च दुर्वृत्तस्योचितं तदा ॥४७॥

तथेति स प्रतिज्ञाय जगामैव क्षणात्ततः ।
आदाय कुञ्चिकां यत्र साध्वी सा ध्यानमास्थिता ॥

स्नुषां निक्षिप्य तस्मिंस्तु विस्रब्धहृदया पुनः ।
अवतारितभारेव मद्दं तं रमते स सा ॥४९॥

॥ इति तृतीयः सर्गः ॥

## ॥ चतुर्थः सर्गः ॥

याम एको गतो रात्र्यां प्रशान्ताः सत्वसंचयाः ।
विहरत्यम्बरतले स्वच्छा जीमूतसंहतिः ॥१॥

कुतुकेन च तां पश्यन् याति तारापथे विधुः ।
कह्लारामोदभारेण मन्दं गन्धवहो ययौ ॥२॥

व्याकोचस्तवकावल्यो वलन्त्यो विटपांस्तदा ।
उपगूढविटास्तन्व्य इव रेजुर्विभूषिताः ॥३॥

आसाद्य भगवान् कृष्णः नलिन्यास्सदनं द्रुतम् ।
अन्तर्गृहान्तराबद्धां ददर्शायतलोचनाम् ॥४॥

उपविश्यासने चित्रे ध्यायन्तीमात्मविग्रहम् ।
अल्पाकल्पामपि प्राज्यं भूषितां यौवनश्रिया ॥५॥

निमील्य लोचनद्वन्द्वं निश्चलं समवस्थिताम् ।
आगत्य पुरतस्तस्याः प्रेम्णा तां समलोकयत् ॥६॥

किञ्चिच्छब्दमिव श्रुत्वा स्वयमुन्मृज्य लोचने ।
पश्यन्ती पुरतस्तन्वी ददर्श मधुसूदनम् ॥७॥

सम्यक्कल्पितकेशाग्रन्यस्तरत्नललाटिकम् ।
विशालफालविन्यस्तकस्तूरीतिलकाञ्चितम् ॥८॥

मारचापप्रतिद्वन्द्विभ्रूतलाभ्यां विराजितम् ।
कारुण्यवर्षिनेत्रान्तं कुड्मलाकारनासिकम् ॥९॥

कुण्डलद्वयकान्त्यौघभ्राजद्रम्यकपोलकम् ।
शार्दूलनखसंक्लृप्तरत्नग्रैवेयकोज्वलम् ॥१०॥

विचित्रकुसुमाक्लृप्तहारोल्लसदुरस्स्थलम् ।
रक्तचंदनसंलिप्तविशालतरवक्षसम् ॥११॥

बहुमूल्यैरमूल्यैश्च शोभितं कटकाङ्गदैः ।
नागनाथवराभोगसमशृङ्खलिकायुतम् ॥१२॥

अङ्गुलीषु दधानं तमङ्गुलीयकसंहतिम् ।
रत्नैरीशाश्रयात्तारा परिभाविभिरास्तृताम् ॥१३॥

वसानं वसनं पीतं महार्घे हेमकालेपतम् ।
ऊर्ध्वं ततो दधानंच वासो मारकतच्छवि ॥१४॥

नवरत्नप्रभोद्भासिनूपुरालङ्कृताङ्घ्रिकम् ।
वरालक्तकसंसेकरक्तप्रपदमण्डितम् ॥१५॥

कृतार्थयन्तमात्मानमाविर्भूय पुरस्स्वयम् ।
विवशामेव कुर्वन्तं मञ्जुस्मेरावलोकनैः ॥१६॥

विस्मयेन भयेनापि समुत्थाय ससंभ्रमा ।
पादयोरपतन्मुग्धा वक्तुं वाचमनीश्वरा ॥१७॥

चिराय पादपतिता नोत्तस्थौ मोहितान्तरा ।
काङ्क्षणीया हि जन्तूनामियमेव मनोगतिः ॥१८॥

पादयोः पतितां कृष्णस्तदा भक्तिमतीं सतीम् ।
करैरुत्थापयामास स्वयमार्तार्तिभञ्जनः ॥१९॥

सा तु स्विन्नेन गात्रेण साञ्जलिः शिरसानता ।
भक्त्या च परया युक्ता पश्यन्ती तत्पदाम्बुजे ॥

अहो स भगवान् कृष्णः स्वयमस्मद्गृहं गतः ।
इत्थं सञ्चिन्तयन्त्येव तिष्ठति स्मावशान्तरा ॥२१॥

मत्वा भक्तिभरेणैव तिष्ठन्तीं तां निरुत्तराम् ।
सौहार्दादथ सम्प्रेक्ष्य स्मयमानस्तदाब्रवीत् ॥२२॥

मा शुचस्त्वं महाभागे त्यज मोहं भयं शुचम् ।
तवानुग्रहमाकांक्षन्नागतोऽहं गृहं तव ॥२३॥

उन्नम्य वदनं सुभ्रूः पश्येमं त्वयि वत्सलम् ।
श्रोतुं ते मधुरं वाक्यं कुतुकेनाहमागतः ॥२४॥

इत्थमुक्तं वचः श्रुत्वा कृष्णेन प्रेमगर्भितम् ।
किञ्चिदुन्नम्य वदनं सा समैक्षत तन्मुखम् ॥२५॥

लज्जया सङ्कुचन्त्येव गात्रमुत्पुलकं निजम् ।
पश्यतिस्म मुखाम्भोजं प्रभोस्तत्तनुमध्यमा ॥२६॥

उवाच व्रीडिता साध्वी ततस्सा विनयानता ।
श्रुतं मुखाद्वयस्यानां पारम्यं भवतः प्रभो ॥२७॥

यन्नेशा भवतः स्तोत्रे शक्रधातृभवादयः ।
कथमल्पमतिर्देव प्रमदा पारयिष्यति ॥२८॥

इममेव प्रसादेन गृह्णन्नञ्जलिमीश्वरः ।
अनाथां पालयत्वेनां शरण्यः सर्वदेहिनाम् ॥२९॥

इत्थं वदन्त्यां तस्यां तु भक्तबन्धुर्जनार्दनः ।
निर्ममे योगमाहात्म्यादद्भुतं केलिमन्दिरम् ॥३०॥

शातकुम्भमयैस्स्तम्भैः वितानैर्नेत्रहारिभिः ।
सुखस्पर्शोपधानाढ्यरत्नमञ्चैस्समावृतम् ॥३१॥

घ्राणहारि सुमस्रग्भिः सर्वतः सुपरिष्कृतम् ।
दीप्रैर्दीपशतैर्दृश्यैर्निरन्तरमलङ्कृतम् ॥३२॥

वरास्तरणसंवीतं वल्लीपात्रशताकुलम् ।
तत्र तत्र कृतैर्युक्तं भोज्यैः पेयैरमानुषैः ॥३३॥

सुगन्धैर्धूपितं धूपैर्दुर्दर्शमकृतात्मभिः ।
कृतपुण्यैः परं सेव्यं शयनागारमाबभौ ॥३४॥

दृष्ट्वैतद्विस्मयाक्रान्ता न किंचिद्वेद सा सती ।
कथं वा केन वा सद्यः सृष्टमित्यद्भुतं गृहम् ॥३५॥

तदा तु भगवान् कृष्णः करैरादाय कामिनीम् ।
शय्यामारोपयामास लज्जयावनताननाम् ॥३६॥

आलिङ्ग्य सुदृढं तन्वीं बाहुभिः परिघायतैः ।
मुग्धामुन्मादयामास यथाभिलषितं पुरा ॥३७॥

रमयामास तां साध्वीं रमायाः सदृशाकृतिम् ।
रामानयनकह्लारराकानाथनिभाननः ॥३८॥

॥ इति चतुर्थः सर्गः ॥

## ॥ पञ्चमः सर्गः ॥

इत्थमन्तःस्थिते कृष्णे नलिन्या भक्त्या तया ।
गतस्सुदूरं संभ्रान्तः सुधामा गृहमाययौ ॥१॥

अन्तरर्गलितं वीक्ष्य कवाटं सोऽहनत्सकृत् ।
न किंचिदुत्तरं प्राप्य ततो भृशमघट्टयत् ॥२॥

अनुद्घाटितमालक्ष्य कवाटं खिन्नमानसः ।
चुक्रोश मातरित्येव बलवद्बलिनां वरः ॥३॥

आक्रोशैस्सुचिरेणापि ताडनैर्बलवत्तरैः ।
यदा नैवाप संज्ञाश्च त्रासो हृदयमाविशत् ॥४॥

अन्तरर्गलितं केन गृहं माता क्व वा गता ।
कुत्र वा सा गता रात्र्यामिति चिन्तापरोऽभवत् ॥५॥

विलम्ब्य सुचिरं कालं बहिः प्राङ्गणभूमिषु ।
इतिकर्तव्यतामूढो वीथीमध्यं जगाम सः ॥६॥

द्विजराजस्तदारूढो नभोमध्यं विनिर्मलम् ।
संख्यातुमिव दस्यूंश्च कुलटाश्च कुलद्रुहः ॥७॥

तत्रागतेन गोपेन ज्ञात्वा पौराणिकोत्सवम् ।
मातरं च गतां तत्र सुधामा सहसा ययौ ॥८॥

तदास्य महती चिन्ता मानसे पर्यवर्तत ।
किन्तु सापि गता तत्र कोवाऽन्तरभिवर्तते ॥९॥

क्रन्दनं ताडनं भर्त्रा चिराय कलितं पुनः ।
न श्रोत्रपथगं तस्याः मायाधीशस्य मायया ॥१०॥

स गत्वा त्वरया दूरमुत्सवायतने तदा ।
अपश्यद्विपुलं सङ्घमुपविष्टं सकौतुकम् ॥११॥

मूर्धभिः शतसाहस्रैरावृता सा वसुन्धरा ।
नीरन्ध्राम्भोजमुकुला सरसीव तदा बभौ ॥१२॥

ततस्स मृगयामास प्रियाप्रस्वोश्च मस्तकम् ।
दृष्टिक्षमेऽक्षिणीवेष्टे सहस्राक्षस्य वर्ष्मणि ॥१३॥

भ्रमंश्च सुचिरं कालं तत्र तत्र च शङ्कया ।
अलक्षयत्कथंचित्तां जरतीमध्यविष्ठिताम् ॥१४॥

विवृतोष्ठाधरपुटां किंचिदामीलितेक्षणाम् ।
पौराणिकमुखं वीक्ष्य रसयन्तीं च तत्कथाम् ॥१५॥

कृच्छ्रादुपेत्य तं देशं लब्ध्वा दुर्वचसां शतम् ।
पुरतश्च समागम्य जननीं तां ददर्श सः ॥१६॥

आपादशीर्षमपि तमेकवारं विभाव्य सा ।
अनुक्त्वा वचनं किंचिदास्थितावनतानना ॥१७॥

अपूर्वचेष्टया तस्या आकुलस्समचिन्तयत् ।
किंवा न भाषते माता द्रष्टुं वा परिशङ्कते ॥१८॥

किं वाऽपराद्धमालस्यादथवाऽनवधानतः ।
अपावृणोति मां वीक्ष्य मुखं केन प्रियात्मजा ॥१९॥

संविग्नमभवच्चेतस्तस्य मातुर्विपर्ययात्।
आजुहाव स मातेति समालोच्य चिरं स्वयम् ॥२०॥

सा दहन्तीव नेत्राभ्यां दृष्ट्वा तं पुरतः स्थितम् ।
न किंचिदपि चोवाच पुनरप्यानतानना ॥२१॥

मुमोह सुभृशं चेतस्तस्य शुद्धात्मनस्तदा ।
एतावन्तं विपर्यासं मातुर्मनसि पश्यतः ॥२२॥

अनन्यगतिरालोच्य चिरं पप्रच्छ मातरम् ।
क्व गता सा स्नुषातेऽद्य गृहं केनार्गलीकृतम् ॥२३॥

किमर्थमियती चिन्ता रोषो वा मयि दारुणः ।
मया तयापि वा मन्ये नापराधः कृतो महान् ॥२४॥

मूलं किमस्य रोषस्य कुतो वा नाभिभाषसे ।
सदैन्यमित्थं सा पृष्टा दुरुक्तैरुत्तरं ददौ ॥२५॥

कितवस्त्वं कथं तेऽद्य दर्शयस्यनयं मयि ।
विद्धि मां विदिशां दुष्टां ज्ञातां च व्रजवेश्मभिः ॥२६॥

किं वा तव तया कार्यं नलिन्या कुलपांसन ।
अद्यैव मुष्टिनानेन भेदयेयं शिरस्तव ॥२७॥

किं गत्वापि निवृत्तोऽसि गेहं मम दुरासदम् ।
अवेहि जाग्म मां नित्यं निकृतिं तव जानतीम् ॥२८।

मा तुदः पुरतः स्थित्वा दुष्टभोगीव पांसन ।
अन्यथा निश्चितं पूर्वं रचयेयं तवाधुना ॥२९॥

श्रुत्वैतत्तु वचो मातुरपूर्वं भृशदारुणम् ।
किमेतदित्यविज्ञाय क्षणं तूष्णीं बभूव सः ॥३०॥

सुस्राव वारि नेत्राभ्यां कण्ठो गद्गदतां गतः ।
प्रचचाल च जङ्घास्य स्थातुं नापारयत्ततः ॥३१॥

किमुन्मत्ता पुनस्त्वेषा किमाविष्टा पिशाचकैः ।
ज्वराभिभूतावलवदित्थं किं वक्तयसांप्रतम् ॥३२॥

प्रसन्नेन मुखेनाद्य नोन्मत्ता जननी भवेत् ।
अविकाराकृतेर्नेयमाविष्टा वा पिशाचकैः ॥३३॥

पूर्वापराविरुद्धाभिर्वाग्भिर्नेयं ज्वरातुरा ।
विभ्रमस्य मतेरस्याः किन्नु वा कारणं भवेत् ॥३४॥

चिरमालोचयन्नित्थमनवाप्यैव निश्चयम् ।
वक्तुं पुनस्समारेभे लेलिहन् जिह्वयाऽधरम् ॥३५॥

अम्ब नूनमहं क्लान्तः सुदूरगमनादिह ।
तथाऽपि किं तुदसि मां वाक्यैरेतैररुन्तुदैः ॥३६॥

आदिश प्रथमं तां तु मातर्निर्वृतये मम ।
ततः प्रतिवदिष्यामि वक्तव्यं वचसां तव ॥३७॥

कृष्णः स्नुषायास्संह्लापं अनिच्छन्नेव दुर्मतिः ।
आयात इति सा मत्वा जज्वालाग्निरिवैधिता ॥३८॥

ततस्सनिनदं वृद्धा जगर्ज क्रोधमूर्च्छिता ।
अदन्तमन्तरास्यञ्च सम्प्लाव्य रसनाग्रतः ॥३९॥

अरे कितव दुर्बुद्धे नृशंस कुलपांसन ।
अप्रलोभ्यामिमां विद्धि जातु धूर्तशतैरपि ॥४०॥

हन्यामद्यैव पापं त्वां नित्यं च दुरनुष्ठितम् ।
यदीह न भवेयं वा जनतामध्यवर्तिनी ॥४१॥

सारवं शपमानायां इत्थं तस्यां महोत्सवे ।
कोसौ शब्द इति क्रुद्धाश्चुक्रुशुस्तत्र तत्र ते ॥४२॥

तत्रस्थेन तदा लभ्यमपमानं निरीक्ष्य सः ।
निरगादञ्जसा तस्मात् सद्मान्मानधनः स्वयम् ॥४३॥

निर्गत्य च ततः श्रान्तः पुरा दूरागमेन सः ।
क्षुधयाद्य परिक्लिष्टो वाक्यैर्मातुश्च दारुणैः ॥४४॥

अन्तर्गताभ्यां नेत्राभ्यां स्रावयन्नश्रु विह्वलः ।
खेदधारापरिक्लिन्नः पदा चलितुमक्षमः ।४५॥

मूढेन मनसा विष्वक् मन्दं मन्दं विलोकयन् ।
स्वस्यैव वेश्मनो द्वारमाजगाम शनैश्शनैः ॥४६॥

आगत्य च पुनर्द्वारं पिहितंच यथापुरम् ।
वीक्ष्य खिन्नमनास्तत्र पपात धरणीतले ॥४७॥

प्रस्थिते च पुनस्तस्मिन् विदिशा प्राज्ञमानिनी ।
इत्थमालोचयामास प्रहृष्टेनान्तरात्मना ॥४८॥

अहो कृष्णस्य दुश्चेष्टाः प्रविश्येमं जनार्णवम् ।
प्रलोभयति मां दुष्टः जागरूकामतन्द्रिताम् ॥४९॥

विदिशापि प्रलोभ्या किं मायिनी मायिभिर्वृता ।
किं वा नाज्ञासिषं कृष्णं सुधाम्नो रूपधारिणम् ॥५०॥

प्रातर्मम दुरुक्तानामागतः प्रतिकर्मणे ।
करणीये कृते सम्यग्लम्बतुण्डो विनिर्गतः ॥५१॥

विभियात् किमियं संघं दृष्ट्वापि विदिशादृढा ।
पुमांसमपि वा दुष्टं प्रेक्ष्य पूर्वमवस्थितम् ॥५२॥

सम्यग्दुरुक्तं सार्थेऽस्मिन्नुचितं तस्य दुष्कृतेः ।
विचक्षणां मामालक्ष्य न खलः पुनरेष्यति ॥५३॥

अवेत्य सुहृदः प्रोक्तं यत्सुधाम्ना तु सूरिणा ।
तदेव खलु सम्प्राप्तं घटिकार्धेन मामिह ॥५४॥

पूर्वमेव सुतेनाहं नोक्ता चेत्तच्चिकीर्षितम् ।
पतेयमपि तत्सृष्टवागुरायां विमूढधीः ॥५५॥

स्थाने समर्पिता तन्वी नवोढा सा तपस्विनी ।
वित्रासितो मया चैषः सम्यक्कु द्वितयं कृतम् ॥५६॥

इति सञ्चिन्त्य शान्ता सा रमते स्म कथारसे ।
लोलुपां भव्यभक्ष्येषु रसनां लेलिहत्यलम् ॥५७॥

कोलाहलेन महता पुराणे विरतिं गते ।
पौराणिकाय सम्मानान्यतुलान्युपवीक्ष्य सा ॥५८॥

भक्ष्यांश्च विविधान् खाद्यान् गृहीत्वा प्रचुरान् करे ।
रात्र्यां यामावशिष्टयां सा गेहं पुनरायथौ ॥५९॥

॥ इति पञ्चमः सर्गः ॥

---

## ॥ षष्टस्सर्गः ॥

---

आगत्य बहिरालिन्दं ज्योत्स्नया विशदीकृतम् ।
आह्वयन्ती सुधामानं सा कवाटमुपाहनत् ॥१॥

अन्तरानन्दरूपेण कृष्णेन नलिनी तदा ।
तन्वती विविधाः केलीः तल्पे कुसुमसंवृते ॥२॥

श्रुत्वा श्वश्रूरवं दीना तदाभूद्भयविह्वला ।
स्तनितारवमाकर्ण्य फणिकन्येव गह्वरे ॥३॥

अहो श्वश्रूस्समायाता कोपनाचात्यमर्षणा ।
यत्किंचिदपिवा स्वेष्टं मयि कर्तुमपि प्रभुः ॥४॥

अहो नष्टासि देवेश न जीवेवेयमितः परम ।
यदि नेत्रपथं तस्याः प्राप्ता नाथ त्वयासह ॥५॥

किं वा मयाऽद्यकर्तव्यं भवता वा सुरर्षभ ।
मारयिष्यति मां नूनमित्थं दृष्टिपथं गताम् ॥६॥

यद्वा तद्वा भवतु मे न शोचाम्यात्मनः कृते ।
यल्लब्धो भवतः सङ्गः स्वस्त्रीणामपि दुर्लभः ॥७॥

अपयातु भवान् शीघ्रं येन केनापि वा पथा ।
भवतो वर्तनादेव जीवन्त्यत्र व्रजौकसः ॥८॥

इत्युक्तवत्यां प्रेयस्यां सभयं साश्रुपातनम् ।
उवाच भगवांस्तस्या अंसे कृत्वा कराम्बुजम् ॥९॥

मा भैषीर्मा च सन्तापं कार्षीर्मय्यत्र सुस्थिते ।
भक्तान् कृच्छ्रगतान् पश्यन्न तिष्ठेयं क्षणार्धकम् ॥१०॥

भक्त्या परमया तन्वि त्वया ध्यातोस्म्यनारतम् ।
जह्यामहं कथं वा त्वां प्राणैः प्रियतरां मम ॥११

तपसाऽद्य प्रभूतेन चिरध्यानार्जितेन ते ।
निबद्धं फलदानाय विद्धि मां गेहमागतम् ॥१२॥

गत्वा सधैर्यं तन्वाङ्गि कुरुकार्यमनन्तरम् ।
उद्घाटय कवाटं च साधये ते मनोरथान् ॥१३॥

इत्थं ब्रुवति कृष्णे सा विस्रम्भार्हे महामतिः ।
आलम्ब्य धैर्यं कृच्छ्रेण कवाटार्गलमाददे ॥१४॥

अनुगम्य च तत्पार्श्वे तदा मायाविशारदः ।
स स्मेरवदनाम्भोजस्तस्थौ प्रेम प्रदर्शयन् ॥१५॥

कवाटं स्वयमुद्घाट्य जरती जागराकुला ।
अपश्यद्भयसंविग्नां स्नुषां तामाकुलान्तराम् ॥१६॥

विष्वक्प्रकीर्णचिकुरां प्रमृष्टतिलकावलिम् ।
अञ्जनाक्तकपोलान्तां भृशं कलुषितेक्षणाम् ॥१७॥

पाणिपल्लवसंक्लृप्तविस्रवन्नीविबन्धनाम् ।
भृशसंमर्दसन्ताम्यद्घर्ममहाटकवल्लरीम् ॥१८॥

कदलीमिव विध्वस्तां कंपमानशरीरिणीम् ।
दृष्ट्वा किमेतदिति सा चिन्तयन्ती व्यतिष्ठत ॥१९॥

तस्याश्शरीरव्यत्यासात्तथा हावविभावयोः ।
लोकज्ञया जरत्यास्यां भृशं च परिशाङ्कितम् ॥२०॥

लोलनेत्रा ततः पार्श्वे तस्याः कृष्णं व्यलोकयत् ।
नीलजीमूतसङ्काशं नवचम्पकमालिनम् ॥२१॥

कुचकुङ्कुमसंरक्तचन्दनाङ्कितवक्षसम् ।
दयिताञ्जनसंक्षोदश्यामरम्यकपोलकम् ॥२२॥

तरुणीचरणालक्तशोणपीनभुजान्तरम् ।
मदघूर्णितनेत्रान्तं मदनाकारशालिनम् ॥२३॥

द्रुतबद्धान्यथाभूतं वसानं क्लिष्टमम्बरम् ।
श्लथबाहुयुगोन्नेयप्रबलप्रेयसीरतम् ॥२४॥

दर्शनात्तदवस्थस्य तस्य कृष्णस्य वेश्मनि ।
जरत्यास्तु तदा देहः स्वयं दग्ध इवाबभौ ॥२५॥

ततः कोपेन महता वाचा संसज्जमानया ।
प्रोवाच तत्तदपि सा दुःश्रवं दुःसहं वचः ॥२६॥

सृष्टोऽसि किमु वा धात्रा शीलभङ्गाय योषिताम् ।
को गुणस्तेन वा लब्धो जारं त्वां सृजतेदृशम् ॥२७॥

दुरुक्तश्शतवारं च सदस्यप्यपमानितः ।
न जहासि कथं मूढ दुष्कृतौ साहसं त्विदम् ॥२८॥

हैय्यङ्गवीनं मुष्णासि गुप्तान्यपि गृहान्तरे ।
कुतुकं किमु वा तेऽद्य दधिभाण्डप्रभञ्जने ॥२९॥

नूनं त्वं बाल एवासि भुङ्क्षे गोपीशतं कथम् ।
अन्तर्गृहगता एता वशयस्यद्य केनवा ॥३०॥

मन्त्रः किमौषधं वास्ते येनेदं क्रियतेऽधुना ।
त्वया किलापजातेन सकलङ्को व्रजः कृतः ॥३१॥

ईदृशायैव पुत्राय नन्दः किमकरोत्तपः ।
पुत्रमेनं समुत्पाद्य यशोदा सा महीयते ॥३२॥

अवलोकेन हासेन व्रज एष वशीकृतः ।
किं वा करिष्यसि पुनरेनं त्वद्वशगं जनम् ॥३३॥

पूतना मारिता सापि शकटश्शकलीकृतः ।
बकवत्सतृणावर्ताः प्रापिता यममन्दिरम् ॥३४॥

प्रेषिता विधिना ते तु भाविकाय व्रजौकसाम् ।
हत्वा तानपि दुष्टात्मन् राजसे राजराजवत् ॥३५॥

कृतं सर्वं प्रयत्नेन तव दुर्वृत्तशान्तये ।
तेनैव वर्धते मूर्ख सहजं तव कैतवम् ॥३६॥

कथमुद्घाटितं जार बहिर्बद्धं कवाटकम् ।
भुक्ता पुनरियं तन्वी कस्माद्वा वद तत्वतः ॥३७॥

ततः प्रोवाच भगवान् स्मयमानो रुषान्विताम् ।
प्रेयस्यां विकलाङ्गायां शृण्वन्त्यां च ससम्भ्रमम् ॥३८॥

जराजर्जरिताङ्गी त्वं विस्मरस्येव तां कृतिम् ।
स्मरणाय पुनस्तेऽद्य वदाम्यवहिता शृणु ॥३९॥

सङ्गमध्यं मयि प्राप्ते ग्रन्थेरुन्मुच्य कुञ्चिकाम् ।
स्वयमेवाददाः पूर्वं किन्तत्स्मरसि कोपने ॥४०॥

तदा त्वमवदो वृद्धे नलिनी वर्तते गृहे ।
भुङ्क्ष्व स्वैरमिति प्रेम्णा किं वा स्मरसि तद्वचः ॥४१॥

ततः प्रोवाच सा रुष्टा स्मरन्ती प्राक्कृतां कृतिम् ।
सत्यमेतन्मम सुतं मत्वा त्वय्यर्पितं द्वयम् ॥४२॥

ततस्तु भगवानाह नापराधी भवाम्यहम् ।
भुक्ता पुनरियं तन्वी या श्वश्वैव समार्पिता ॥४३॥

शृण्वन्नेतद्वचः सोऽपि सुधामा शयनोत्थितः ।
आजगामाकुलस्वान्तः स मध्यं मातृभार्ययोः ॥४४॥

दृष्ट्वा तमनुतापार्द्रा क्षुत्क्षामं दीनचेतनम् ।
अहो नु मूढया क्लृप्तमित्थमित्याक्रुशद्भृशम् ॥४५॥

अन्तर्हितं तदा दृष्ट्वा नलिनी केलिमान्दिरम् ।
श्रुत्वा श्वश्वा अपि वचः विस्मयं परमं ययौ ॥४६॥

सौहार्देन ततः कृष्णस्तेषां मुग्धधियामपि ।
दर्शयामास तं रूपं निजं भक्तान्यदुर्लभम् ॥४७॥

महार्हमणिकेयूरमधुरालोकमस्तकम् ।
शार्ङ्गचक्रगदापद्मराजद्बाहुचतुष्टयम् ॥४८॥

कम्बुकण्ठसमालम्बिवरकौस्तुभमालिनम् ।
वनमालिकया राजद्विशालतरवक्षसम् ॥४९॥

सुगन्धिचन्दनामृष्टपृथुदीर्घभुजद्वयम् ।
पीतकौशेयवसनं प्रमृष्टमणिकुण्डलम् ॥५०॥

मन्दहासमुखांभोजं रुचिराधरनासिकम् ।
त्रिभङ्गिललिताकारं त्रिवर्गफलदायकम् ॥५१॥

दृष्ट्वा तं कमलाकान्तं रूपेणानेन संगतम् ।
विस्मयं परमं जग्मुः सर्वे ते जातसम्भ्रमाः ॥५२॥

ततस्तं ददृशुः कृष्णं विपुलीकृत्य लोचने ।
पुलकैरञ्चिताङ्गास्ते भक्त्या च प्रवणान्तराः ॥५३॥

मोहनं सर्वजन्तूनां मधुरैरवलोकनैः ।
प्रह्लादवरदं देवं प्रकृष्टजनवत्सलम् ॥५४॥

वारणाभयदानेन वारणास्यसुहृद्वरम् ।
क्षीराम्बुधिकृतावासं क्षारनीरधिबन्धनम् ॥५५॥

गमनत्वरयेवाद्य गरुडारूढविग्रहम् ।
दायकं सर्वभव्यानां नाशकं निखिलापदाम् ॥५६॥

ववन्दिरे पदद्वन्द्वे भक्त्या परमया तदा ।
याचमानाः सानुशयं स्वापराधक्षमापणम् ॥५७॥

प्रणम्य सुचिरं तं तु प्रणम्रजनवत्सलम् ।
तुष्टुवुर्गद्गदैर्वाक्यैरानन्दभरितान्तराः ॥५८॥

किमस्माभिस्तपस्तप्तं किमु पूर्वैर्महात्मभिः ।
यदागतः स्वयं गेहमस्मदीयमधोक्षजः ॥५९॥

समागमाय साधूनां यदि तप्यं परं तपः ।
किमु वा सर्वलोकानां नाथस्यास्य मधुद्विषः ॥६०॥

यन्न पारयतीश त्वां त्रयी साप्युपवर्णने ।
कथं वयं त्रयो मूढाः पारयामस्तव स्तवे ॥६१॥

चिरं तपन्तिमुनयः क्षणं त्वद्दर्शनेप्सया ।
केन वा सुकृतं वर्ण्यमस्माकं चिरदर्शिनाम् ॥६२॥

मर्षणीयं दयार्द्रेण नाथेन दुरनुष्ठितम् ।
प्रोक्तान्यपि दुरुक्तानि बालिशैर्दीनबान्धव ॥६३॥

इति गद्गदया वाचा साश्रुभिश्चापि लोचनैः ।
उपतस्थुरुपस्थेयं पश्चात्तापाभितापिताः ॥६४॥

ततश्च विदिशा दीना प्रोवाच विनयान्विता ।
पश्यन्ती च स्नुषां साध्वीं सगौरव मिदंवचः ॥६५॥

सती समुद्धरत्येव कुलद्वयमितीरिता ।
सत्यं पुरातनीवाक्सा यदद्य विशदीकृता ॥६६॥

तपस्विन्यानयानाथ स्नुषया पाविताववयम् ।
कुलद्वयमिदं देव कृतं स्तव्यं महात्मभिः ॥६७॥

इत्थं प्रार्थयमानेषु तेषु भक्तैकबान्धवः ।
उत्स्मयन् भगवानाह स सौहार्दमिदं वचः ॥६८॥

माऽनुतापं भजत्वद्य वृद्धा शीलकृतत्परा ।
श्वश्र्वा यदुचितं कर्म तदेव समनुष्ठितम् ॥६९॥

इयं तु साध्वी मच्चित्ता मद्ध्यानैकरतासदा ।
भक्ता परं प्रिया सा मे बान्धवा एव तज्जनाः ॥७०॥

कोवा बन्धुजनस्योक्तौ कुप्येद्यदपि बालिशः ।
नचाद्य मर्षणीयं वा नापि वक्तव्यमात्मनि ॥७१॥

सस्मितं तदिदं वाक्यमुक्त्वा प्रेम्णा निजान् जनान् ।
आशीर्भिरभिनन्द्याथ क्षणादन्तर्दधे विभुः ॥७२॥

चिन्तयन्तः प्रभोर्लीला वर्णयन्तश्च तद्गुणान् ।
ध्यायन्तः सततं रूपं ते कालं परमत्ययुः ॥७३॥

नलिनी सा तु तन्वङ्गी ध्यायन्त्येव जनार्दनम् ।
अनन्यहृदया साध्वी चिरं कालमुवास सा ॥७४॥

न पुमान् नलिनी देवी नापि विप्रकुलोद्भवा ।
न च वा वयसा वृद्धा नापि शास्त्रविचक्षणा ॥७५॥

प्रत्नेन सुकृतेनैव परं भावमुपेयुषी ।
गोविन्दे परमानन्दे शाश्वतीमाप सद्गतिम् ॥७६॥

न पूजा कालिता तन्व्या बहूपकरणैरपि ।
न तोयमपि वा दत्तं नार्चितं चरणं सकृत् ॥७७॥

समर्प्य केवलं स्वान्तं तस्मिन्भक्त्या चतुर्भुजे ।
इदमाप पदं पूतं यद्दुरापं तपोधनैः ॥७८॥

निर्णेयमेतद्विद्वद्भिः पूजां नापेक्षते हरिः ।
अर्पणं स्वात्मनो नूनं भक्त्याकृष्टेन चेतसा ॥७९॥

रचितं सुन्दरेशेन भक्तायाश्चरितं महत् ।
पापापनोदमाशास्य भक्तिवृद्धिंच केशवे ॥८०॥

अब्दे सैकोनपञ्चाशत्पञ्चसाहस्रके कलेः ।
महाकविः सुन्दरेशः काव्यं रचितवानिदम् ॥८१॥

॥ इति षष्ठः सर्गः ॥

॥ नलिनी चरितं समाप्तम् ॥

## ॥ श्रीरामप्रसादस्तवः ॥



क्षणं यदि हृदंबुजे रघुपतेः पदं स्थापितं
   कृतान्त न किलेश्वरस्त्वमसि तस्य पुण्यात्मनः ।
अनारतमधोक्षजे निहितधीरयं यत्कविः
   बिभेत्यसुलयक्षणे तव करालदण्डाय किम् ॥१॥

पिशाचसदृश मनः प्रचलितं दिशामन्तरं
   प्रसाद्य पुरुसंक्रमैस्तत्र कृतं पदाब्जे सकृत् ।
मदेनसि विवेचनं रघुपते दृढं कुर्वता
   क्षणं यदि विलंब्यते ननु हतोऽसि पापैकभूः ॥२॥

स गर्जतु पयोधरो वमतु वाऽशनीनां शतं
   पतन्तु तपनस्य वा द्रुतविभिन्नखण्डाः पुरः ।
विचाल्य गिरयः क्षितिं शतश एव शीर्यन्तु वा
   न साध्वसमिहास्ति मे रघुपतेः पदालंबिनः ॥३॥

प्रभो करुणवीक्षणं यदि तवास्ति सीतापते
   सुसंभृतमिवातुलैरपि गृहं तु शून्यान्तरम् ।
तुरङ्गकलभाचितं यदपि भूभृतां मन्दिरं
   विना करुणया विभोर्ननु परेतभूमिद्युति ॥४॥

करे कमलमालिका रसितरामनामामृता
   मदीयरसना विभुर्हृदयमन्दिरे राघवः ।
क्षणं यदि भवेदिदं मम पुरातनैर्वा वृषैः
   कृतार्थमिह मानवं ननु भवेदिदं जन्म मे ॥५॥

सुचन्दनकशादयोरुत वरेक्षुर्निंबद्रुवोः
   प्रफुल्लसुममालिकाभुजगभोगयोर्वा स्वयम् ।
मृदंगपटहध्वनेरपि न वेत्ति भेदं पुन
   र्विहाय रघुनन्दनं श्रयति योऽपरं दैवतम् ॥६॥

दयाऽपिदयिताकुचप्रदलनोद्यते दर्शिता
   रिपोरपि च सोदरः स्वजन एव सद्यः कृतः ।
प्रभुक्तमवशेषितं रसनया किरातस्त्रियाः
   विना तमिह राघवं भजसि केन देवान्तरम् ॥७॥

प्रपन्नजनतावने सशयथं प्रतिज्ञा कृता
   पुरः प्लवगभूपतेरपि वनौकसामर्णवे ।
निशाचरपरिग्रहात्तदपि नस्तु सन्दर्शितं
   विना तमिह राघवं भजसि केन देवान्तरम् ॥८॥

किं वा तेन कुटुंबिनी जनकजा श्येनेन संरक्षिता
   किं नीतो यममन्दिरं स तु रिपुस्तेनैव वा रावणः ।
मद्धेतोरयमुद्यतः सुमहतीं संप्रापितो यातना-
   मित्यालोच्य दयाकुलेन विभुना नीतो विधातुः पदम् ॥

द्वैताद्वैतविचारणा तु धिषणामुन्मादयत्येव नः
प्रस्थानत्रयभाष्यसेवनमपि प्रायाऽनुलापक्षमम् ।
दन्तानामपि धावने न हि वयं शक्ता यथोक्तं स्मृतौ
भक्तेरस्ति गती रघूत्तमपदे नान्यैव रक्षाविधौ ॥१०॥

दत्तं मानवजन्म तत् द्विजकुले पूतान्ववाये पुनः
संसर्गश्च महद्भिरेव दिविषद्वाण्यां परं प्रेम च ।
बुद्धिर्नश्वरडित्यनन्तविषयेषूर्वीहिरण्यादिषु
प्रीतिस्त्वच्चरणे रघोः कुलमणे देयं किमास्ते त्वयि ॥११॥



## ॥ मनोरथश्रेणिः ॥

भुक्ता भोगचयाः सतर्षमखिला भोज्याः परं मानवै-
स्तीर्थेषु प्रतिपादितं वसु मया भक्त्या च कृच्छ्रार्जितम् ।
सुध्यातं चरणांबुजं रघुपतेराराधिताः पूर्वजाः
प्राणानां श्रममन्तरेव विगमादाप्तुं किमास्ते मम ॥१॥

ध्यायंस्ते गुणसंचयान् रघुपते शृण्वन् कथास्तेऽमलाः
पश्यन्नुत्फुलकं तवांगसुषमामाम्रेडयन्नाम ते ।
मोक्तुं जीर्णतरं कलेबरमिदं निर्यातनं कामये
नैवान्यन्मम काङ्क्षणीयमधुना पृथ्व्यामुत स्वर्भुवि ॥२॥

यावद्विश्लथनेन सन्धिनिवहः प्राप्नोति वाऽपाटवं
यावन्नित्यकृतौ परैरुपकृतिश्चावश्यकी वा भवेत् ।
यावद्बन्धुगणः स्थितिं मम विभो भारं परं मन्यते
तावत्ते चरणांबुजं रघुपते प्राप्तुं मनीषा मम ॥३॥

प्राणप्रयाणसमये रघुपुंगवस्य
पश्येयमात्तधनुषः पुरतो नियोज्यान् ।
सन्तानिकं जनमिमं किल नेतुकामान्
मञ्जुक्वणत्कनककिंकिणिना रथेन ॥४॥

यानं विधाय सविधे प्रणयेन भूम्ना
सोत्पातमेत्य मम चान्तिकमुत्तमास्ते ।
आदाय बाहुभिरिमं परिघातिदीर्घैः
तत्स्यन्दने कुतुकतो विनिवेशयेयुः ॥५॥

चित्रासने मृदुतरे विनिवेश्य मां ते
निर्वर्ण्य वक्त्रमपि मे गुरुगौरवेण ।
आलापयंश्च कुतुकादथ देवयान-
मार्गेण शर्मनिलयं सहसा नयेयुः ॥६॥

आनीय हेमकलितेन रथेन दीन-
मन्तर्गृहं प्रचुरभक्तजनावकीर्णम् ।
अन्तःपुरं रघुपतेरमलं प्रवेश्य
मां राघवाय विनयेन निवेदयेयुः ॥७॥

तन्नूत्नरुक्मसदनं नवरत्नक्लृप्त-
स्तंभान्वितं नयनहारि विचित्रशिल्पम् ।
उत्फुल्ललोचनयुगस्तु निभालयेय-
माश्चर्यकौतुकतृषातरलान्तरङ्गः ॥८॥

अस्मांस्तु सर्वविभवैरपि यः समार्चत्
तज्ज्ञापुरादयमुपैति स सुन्दरेशः ।
वीक्षध्वमित्यवनिजामनुजांश्च शंसन्
देवो भविष्यति ससौहृदमग्रतो मे ॥९॥

आयाहि बालक चिरं खलु विश्लथोऽसी-
त्यामृश्य पाणिकमलेन मदीयमङ्गम् ।
आरोप्य पीतवसनोज्ज्वलमङ्कमारा-
न्मां तोषयेद्रघुपतिः करुणासमुद्रः ॥१०॥

दृष्ट्वा तदद्भुतमुखं रघुपुंगवस्य
स्पृष्ट्वा च कोमलवपुः परमस्य पुंसः ।
कम्पाकुला पुलकिता च भवेत्तनुर्मे
भावेन तत्क्षणभवेन हृदंबुजान्तः ॥११

उत्कण्ठितं जनमिमं गुरुगौरवेण
लज्जानतं च सविशेषसमादरेण ।
अंकावरोहणकृतोद्यममार्तबन्धुः
संश्लेषयेदुरसि चन्दनशादशीते ॥१२॥

आब्रह्मकल्पमिह संवस भूरिभोगान्
मद्भक्तमात्रसुलभान् रसयन्ननर्घान् ।
अन्तेमदीयतनुमाविश पुण्यभूतां
यस्मान्न निर्गतिरिति प्रणयाद्ब्रुवीत ॥१३॥

इत्थं विचिन्त्य सुदृढं परया च भक्त्या
यातः पदं रघुपतेः शरणं चिराय ।
किं पूरयिष्यति मनोरथमेनमीशः
किं मे निरोत्स्यति तमप्यथ दुष्कृतौघः ॥१४॥

# ॥ आर्यापञ्चाशत् ॥

आर्यां प्रणम्य जननी-
मार्यांबामपि च तत्सुतं सदाचार्यम् ।
आशास्य मोक्षसम्पद-
मार्यापंचाशतं वितनुतेऽयम् ॥

आशा

आशा ममास्ति महती पारं भववारिधेः प्राप्य ।
उपगूढश्च विरत्या रन्तुं सुचिरं प्रमोदनिलयान्तः ॥१॥
पद्मासनोपविष्टः पादपमूले कवेरकन्यायाः ।
नासाग्रदत्तदृष्टी रसयेयं किंनु तं परानन्दम् ॥२॥
संभावयन् प्रपंचं स्वात्माभिन्नं चिदात्मकं सत्यम् ।
वीतद्वन्द्वविमर्दः किन्नु भवेयं दिगंबरो मौनी ॥३॥
अन्तर्मुखं च कृत्वा सेन्द्रियवर्गं मनः प्लवगमेनम् ।
योगोद्घाटितहृदये यमयिष्ये किंनु निश्चलं सुचिरम् ॥
अंसप्रकीर्णकेशो नावेक्षितकायनिधन निर्वाणः ।
आशांबरश्च मौनी किंनु चरेयं यथेच्छमटवीषु ॥५॥
एकैव मेऽद्य कांक्षा विषयानुपभुज्य सुचिरमार्तस्य ।
आन्तरमेव मदीयं तत्वं ध्यायन् वने रहसि वस्तुम् ॥

लीयेत तत्र चेतो ब्रह्मणि मोदात्मके परे पूर्णे ।
इत्येव कांक्षयाहं राघवचरणौ चिराय संसेवे ॥७॥
दीपमिव वीतिहोत्रे करकोपलमिव सुरापगानीरे ।
एनं जीवात्मानं तस्मिन् संलाप्य किंनु मुदितः स्याम् ॥

गुरुकरुणा

त्रिगुणमयीं प्रकृतिनदीं ततुं पोतोऽस्ति गुरुकरुणा ।
तामन्तरा तितीर्षुर्यास्यसि कृष्टो भवाम्भोधिम् ॥९॥
स्वप्ने दृष्टानि जनो जाग्रति मिथ्या यथेह जानाति ।
गुरुणा प्रबोधितः सन् विषयानतुलांस्तथैव स ज्ञानी ॥
गिरिराजकन्दरान्तर्गुरुकृपया लब्धदिव्यविज्ञानः ।
एकान्ततो निविष्टो भुङ्क्ते कश्चिन्मुनिः स्वसंमोदम् ॥११॥
अविमर्शरम्यभूते विरसान्ते को रमते विषयेऽस्मिन् ।
गुरुकृपया लब्धधियो वान्ताशितवद्विधूय मोदन्ते ॥
गुणरहिते प्रकृतिपरे सुखभूयिष्ठे चिदात्मनि स्वच्छे ।
किमु वा परं विलीनः मुदममितां तां लभेय गुरुकृपया ॥
न पुराणशास्त्रवादी नापि कलाकेलिकौतुकरसज्ञः ।
न च धर्मसंचयरतः शरणं मे त्वात्मविद्योगी ॥१४॥
रघुकुलपतिकारुण्यात् लब्धस्तावद्गुरुप्रसादोऽयम् ।
तेनापावृतनेत्रो लीये तस्मिन् सुखात्मके धाम्नि ॥१५॥
मद्भिन्नमेतदखिलं नाना पश्यन्नविद्ययात्वभवम् ।
गुरुकृपयाऽद्यतु वीक्षे जगदखिलं मन्मयं चैकम् ॥१६॥

## विषयविगर्हणम्

विषये नितान्तविषमे सूकर इव लुठसि कर्दमे किं वा ।
पश्यान्तरेव विद्वन् आस्ते निस्सीममोददं भवनम् ॥
विषयावटे विलग्ना वनितातनयादिपूतिगन्धाढ्ये ।
करुणा यदि कामरिपोश्चिरसुकृतैरुत्तरेयुरुत्तुङ्गाः ॥१८॥
विषयाभिलाषपाशैर्मायाव्याधेन बद्धोऽसि ।
ज्ञानासिनाऽद्य कृन्तन् विहर यथेच्छं करीव कान्तारे ॥
भववागुरापिनद्धेष्वेको बन्धं च नैव जानाति ।
यतते त्वपरो मुक्त्यै कोप्येव कृती भिनत्ति बन्धमिमम् ॥
मृग इव मरीचिकांभः सुखतृषितो विशति विषयधन्वानम्
अनवाप्यापि चिराय भ्रमति तु तत्रैव मूढधीः केन ॥
स्पर्शेन्द्रियं तु बलवत् कर्षति विज्ञं च वीतविषयेच्छम् ।
ग्राहैरपि दुर्धर्षं हास्तिकमिव पाल्वलं पंकम् ॥२२॥
निधिनिकरे निहितपदो नाथति काचं यथैव संमोहात् ।
आनन्दसागरस्थो विषयसुखे लोलुपो मर्त्यः ॥२३॥
शिशुरिव कालभुजङ्गान् लौल्यादाकांक्षते विषयान् ।
कुशलाय यदि निरस्तः क्रुध्यति दैवाय मूढचित्तोऽयम् ॥
न हि शर्मणा स लभ्यः सुखभूयिष्ठः सुखावसानो वा ।
विपथं भवाभिधं किं यान्त्येते नैव जानीमः ॥२५॥
कश्चित्पतति सुखेच्छुर्नारीव्याले भवाभिधे कुहरे ।
अन्यस्तमेव पश्यन् विशति व्यथते च निर्गमाशक्तः ॥

## प्रकृतिः

प्रकृतिरियं दुर्ललिता किं किं तनुते विमोहनाय नृणाम् ।
दर्शयति वैपरीत्यात् हितमहितं चैव सा यथार्थमिव ॥
अवमंस्था मा प्रकृतिं त्रिगुणमयीं तां जडेति मन्वानः ।
सा किल सृजति जगत्त्रयमनवधिकं नैजनैपुण्यात् ॥
स्वज्ञाननखरकोट्या प्रकृतिकरेण्णं गुणत्रयनिदानम् ।
आक्रम्य भववनान्ते चरति यथेच्छं स योगिपंचास्यः ॥
यावान् विषये क्लेशस्तावानभिवर्धते मोहः ।
प्रकृतेरियं तु शक्तिः पण्डितमपि संप्रतारयति ॥३०॥
कृत्रिमनासापतनात् नटीव रङ्गादतीव लज्जालुः ।
प्रकृतिर्दोषावगमात् सद्यो विदुषः स्वयं तिरोभवति ॥
इयमञ्जलिः कृतास्ते प्रकृते विरमाद्य दर्शिताल्लास्यात् ।
पश्यामि तव परस्तादास्ते कोऽयं सुखात्मकः शुद्धः ॥

## मानसानसगः

बहिरेव गमनशीलं मानसतुरगं नियम्य वैराग्यात् ।
नियमयसि चेदिहान्तर्निरपायं पारमध्वनो यायाः ॥३३॥
रघुनाथभक्तिधूल्या प्रमृज्य मलिनं मनोमुकुरम् ।
स्वच्छतरः कोपि कृती पश्यति विश्वस्य तात्विकं रूपम् ॥
चलसि द्रवसि चिरं त्वं किन्तु सुखं मानस प्राप्तम् ।
शृणु वाक्य मेतदार्तं क्षणमचलं चेदवाप्नुया मोदम् ॥

विषयमपीमलिनमिदं ज्ञानाद्भिश्चेत् प्रमृज्यते स्वान्तम् ।
स्फुरति किल तत्वभूतं स्वयमेवेदं परं ज्योतिः ॥३६॥
हयवत् द्रवसि नितान्तं प्लवसि च देशान्तराणि कीमडव ।
विश्रम्यतां क्षणंवेत्यभिशास्तिर्मे न कर्णपथगा ते ॥

स्वानुभूतिः

उदवमिते निष्पवने निश्चलमिव दीपकज्योतिः ।
हृदयाब्जभासमानं तेजः पुंजं कृती भुङ्क्ते ॥३८॥
अज्ञातलोकवार्ता अविदितनिजकायसंक्रमज्वालाः ।
अन्तर्नियम्य मानसमानन्दथुमन्तरेव रसयन्ति ॥३९॥
अवियति चन्द्रविहीने ज्योत्स्नाप्रसरं हृदंबुजे पूर्णम् ।
पश्यंश्चिराय योगी मुदितो जीवति पुरातनैः पुण्यैः ॥
अनवरतार्चितशर्वा अपगतविविधेषणासमाघाताः ।
आमोदशिखरिमध्यं सुकृतैः केचित्प्रपद्य मोदन्ते ॥४१॥
मलिनतरगात्रयुक्तोप्यमलहृदुद्भासिकेवलानन्दः ।
जडबधिरमूकवद्गामटति स विज्ञानवान् योगी ॥४२॥
पश्यति जिघ्रति विषयानिति मनुते योगिनं जनौघोयम् ।
अन्तर्मुखेन मनसा रमते कुत्रापि हृत्तले सोऽयम् ॥४३॥
बाह्यं जगद्विलाप्य स्वस्मिन्नेवात्मनि महान्तः ।
अद्वैतभावनार्द्रा आनन्दमयाः पुनन्ति देशमिमम् ॥४४॥
आशांबरः स विद्वानाशारहितेन शान्तचिन्तेन ।
आशास्यनिर्मलयशा आशक्रपदात् समुद्विजते ॥४५॥

वैश्वानरं समिद्धा योगबलात्सुकृतिनस्तु मूलस्थम् ।
दग्ध्वा कर्मफलान्यथ मोदन्ते शर्मवारिधेर्मध्ये ॥४६॥

उद्घाट्य हृदयपद्मं विस्रवदमृतांशुधारया सिक्तम् ।
आनन्दमनवधिं तं कश्चिद्भुंक्ते कदाचिदेव भुवि ॥४७॥

अनुभूय दुस्सहतरं तरुणीतरलायताक्षिसंपातम् ।
तरुणेन्दुचूडभूतं वीक्षेऽन्तर्मोदवारिधिमात्मीयम् ॥४८॥

विहसति निभृतमकाण्डे स्खलति च निम्नेतरेष्वपि तलेषु ।
अन्तर्मुखेन मनसा बहिरयमन्धो जडश्च बधिरश्च ॥४९॥

चिरसंगबद्धभावं समुज्झितं भूतपंचकः कृच्छ्रात् ।
लीयेऽद्य निर्मनस्को ब्रह्मणि तस्मिन् परानन्दे ॥५०॥

॥ आर्यापञ्चाशत् संपूर्णा ॥

॥ शुभमस्तु ॥

